# ॥ श्रीबगलाष्टोत्तरशतनामस्तोत्रम् ॥

अथवा अथवा बगलामुखी अष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ।
नारद उवाच ।
भगवन्देवदेवेश सृष्टिस्थितिलयात्मक ।
शतमष्टोत्तरं नाम्नां बगलाया वदाधुना ॥ १॥

श्रीभगवानुवाच ।
शृणु वत्स प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ।
पीताम्बर्यां महादेव्याः स्तोत्रं पापप्रणाशनम् ॥ २॥

यस्य प्रपठनात्सद्यो वादी मूको भवेत्क्षणात् ।
रिपुणां स्तम्भनं याति सत्यं सत्यं वदाम्यहम् ॥ ३॥

ॐ अस्य श्रीपीताम्बराष्टोत्तरशतनामस्तोत्रस्य सदाशिव ऋषिः,
अनुष्टुप्छन्दः, श्रीपीताम्बरा देवता,
श्रीपीताम्बराप्रीतये पाठे विनियोगः ।
ॐ बगला विष्णुवनिता विष्णुशङ्करभामिनी ।
बहुला वेदमाता च महाविष्णुप्रसूरपि ॥ ४॥

महामत्स्या महाकूर्म्मा महावाराहरूपिणी ।
नारसिंहप्रिया रम्या वामना बटुरूपिणी ॥ ५॥

जामदग्न्यस्वरूपा च रामा रामप्रपूजिता ।
कृष्णा कपर्दिनी कृत्या कलहा कलकारिणी ॥ ६॥

बुद्धिरूपा बुद्धभार्या बौद्धपाखण्डखण्डिनी ।
कल्किरूपा कलिहरा कलिदुर्गति नाशिनी ॥ ७॥

कोटिसूर्य्यप्रतीकाशा कोटिकन्दर्पमोहिनी ।
केवला कठिना काली कला कैवल्यदायिनी ॥ ८॥

केशवी केशवाराध्या किशोरी केशवस्तुता ।
रुद्ररूपा रुद्रमूर्ती रुद्राणी रुद्रदेवता ॥ ९॥

नक्षत्ररूपा नक्षत्रा नक्षत्रेशप्रपूजिता ।

नक्षत्रेशप्रिया नित्या नक्षत्रपतिवन्दिता ॥ १०॥

नागिनी नागजननी नागराजप्रवन्दिता ।
नागेश्वरी नागकन्या नागरी च नगात्मजा ॥ ११॥

नगाधिराजतनया नगराजप्रपूजिता ।
नवीना नीरदा पीता श्यामा सौन्दर्य्यकारिणी ॥ १२॥

रक्ता नीला घना शुभ्रा श्वेता सौभाग्यदायिनी ।
सुन्दरी सौभगा सौम्या स्वर्णाभा स्वर्गतिप्रदा ॥ १३॥

रिपुत्रासकरी रेखा शत्रुसंहारकारिणी ।
भामिनी च तथा माया स्तम्भिनी मोहिनी शुभा ॥ १४॥

रागद्वेषकरी रात्री रौरवध्वंसकारिणी ।
यक्षिणी सिद्धनिवहा सिद्धेशा सिद्धिरूपिणी ॥ १५॥

लङ्कापतिध्वंसकरी लङ्केशी रिपुवन्दिता ।
लङ्कानाथकुलहरा महारावणहारिणी ॥ १६॥

देवदानवसिद्धौघपूजिता परमेश्वरी ।
पराणुरूपा परमा परतन्त्रविनाशिनी ॥ १७॥

वरदा वरदाराध्या वरदानपरायणा ।
वरदेशप्रिया वीरा वीरभूषणभूषिता ॥ १८॥

वसुदा बहुदा वाणी ब्रह्मरूपा वरानना ।
बलदा पीतवसना पीतभूषणभूषिता ॥ १९॥

पीतपुष्पप्रिया पीतहारा पीतस्वरूपिणी ।
इति ते कथितं विप्र नाम्नामष्टोत्तरं शतम् ॥ २०॥

यः पठेत्पाठयेद्वापि शृणुयाद्वा समाहितः ।
तस्य शत्रुः क्षयं सद्यो याति नैवात्र संशयः ॥ २१॥

प्रभातकाले प्रयतो मनुष्यः पठेत्सुभक्त्या परिचिन्त्य पीताम् ।
द्रुतं भवेत्तस्य समस्तबुद्धिर्विनाशमायाति च तस्य शत्रुः ॥ २२॥

॥ इति श्रीविष्णुयामले नारदविष्णुसंवादे
श्रीबगलाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥